असवे स्वाहा वसवे स्वाहा विभुवे स्वाहा विवस्वते स्वाहा
गणश्रिये स्वाहा गणपतये स्वाहाभिभुवे स्वाहाधिपतये स्वाहा
शूषाय स्वाहा सꣳसर्पाय स्वाहा चन्द्राय स्वाहा ज्योतिषे स्वाहा
मलिम्लुचाय स्वाहा दिवा पतयते स्वाहा ३०

मधवे स्वाहा माधवाय स्वाहा शुक्राय स्वाहा शुचये स्वाहा नभसे
स्वाहा नभस्याय स्वाहेषाय स्वाहोर्जाय स्वाहा सहसे स्वाहा
सहस्याय स्वाहा तपसे स्वाहा तपस्याय स्वाहाꣳहसस्पतये स्वाहा
३१

वाजाय स्वाहा प्रसवाय स्वाहापिजाय स्वाहा क्रतवे स्वाहा स्वः
स्वाहा मूर्ध्ने स्वाहा व्यश्नुविने स्वाहान्त्याय स्वाहान्त्याय भौवनाय
स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा प्रजापतये स्वाहा ३२

आयुर्यज्ञेन कल्पताꣳ स्वाहा प्राणो यज्ञेन कल्पताꣳ स्वाहापानो
यज्ञेन कल्पताꣳ स्वाहा व्यानो यज्ञेन कल्पताꣳ स्वाहोदानो यज्ञेन
कल्पताꣳ स्वाहा समानो यज्ञेन कल्पताꣳ स्वाहा चक्षुर्यज्ञेन
कल्पताꣳ स्वाहा श्रोत्रँयज्ञेन कल्पताꣳ स्वाहा वाग्यज्ञेन
कल्पताꣳ स्वाहा मनो यज्ञेन कल्पताꣳ स्वाहात्मा यज्ञेन
कल्पताꣳ स्वाहा ब्रह्मा यज्ञेन कल्पताꣳ स्वाहा ज्योतिर्यज्ञेन
कल्पताꣳ स्वाहा स्वर्यज्ञेन कल्पताꣳ स्वाहा पृष्ठँयज्ञेन कल्पताꣳ
स्वाहा यज्ञो यज्ञेन कल्पताꣳ स्वाहा ३३

एकस्मै स्वाहा द्वाभ्याꣳ स्वाहा शताय स्वाहैकशताय स्वाहा
व्युष्ट्यै स्वाहा स्वर्गाय स्वाहा ३४

इति द्वाविंशोऽध्यायः

# अथ त्रयोविंशोऽध्यायः

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ।
स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम १

उपयामगृहीतोसि प्रजापतये त्वा जुष्टङ्गृह्णाम्येष ते योनिः सूर्यस्ते महिमा ।
यस्तेहन्त्सँवत्सरे महिमा सम्बभूव यस्ते वायावन्तरिक्षे महिमा सम्बभूव यस्ते दिवि सूर्ये महिमा सम्बभूव तस्मै ते महिम्ने प्रजापतये स्वाहा देवेभ्यः २

यः प्राणतो निमिषतो महित्वैकऽइद्राजा जगतो बभूव ।
यऽईशेऽअस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ३

उपयामगृहीतोसि प्रजापतये त्वा जुष्टङ्गृह्णाम्येष ते योनिश्चन्द्रमास्ते महिमा ।
यस्ते रात्रौ सँवत्सरे महिमा सम्बभूव यस्ते पृथिव्यामग्नौ महिमा सम्बभूव यस्ते नक्षत्रेषु चन्द्रमसि महिमा सम्बभूव तस्मै ते महिम्ने प्रजापतये देवेभ्यः स्वाहा ४

युञ्जन्ति ब्रध्नमरुषञ्चरन्तम्परि तस्थुषः ।
रोचन्ते रोचना दिवि ५

युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे ।
शोणा धृष्णू नृवाहसा ६

यद्वातोऽअपोऽअगनीगन्प्रियामिन्द्रस्य तन्वम् ।
एतᳬ स्तोतरनेन पथा पुनरश्वमावर्तयासि नः ७

वसवस्त्वाञ्जन्तु गायत्रेण च्छन्दसा रुद्रास्त्वाञ्जन्तु त्रैष्टुभेन
च्छन्दसादित्यास्त्वाञ्जन्तु जागतेन च्छन्दसा ।
भूर्भुवः स्वर्लाजी३ञ्छाची३न्यव्ये गव्यऽएतदन्नमत्त देवाऽएतदन्नमद्धि
प्रजापते ८

कः स्विदेकाकी चरति कऽउ स्विज्जायते पुनः ।
किᳬ स्विद्धिमस्य भेषजङ्किम्वावपनम्महत् ९

सूर्यऽएकाकी चरति चन्द्रमा जायते पुनः ।
अग्निर्हिमस्य भेषजम्भूमिरावपनम्महत् १०

का स्विदासीत्पूर्वचित्तिः किᳬ स्विदासीद्बृहद्वयः ।
का स्विदासीत्पिलिप्पिला का स्विदासीत्पिशङ्गिला ११

द्यौरासीत्पूर्वचित्तिरश्वऽआसीद्बृहद्वयः ।
अविरासीत्पिलिप्पिला रात्रिरासीत्पिशङ्गिला १२

वायुष्ट्वा पचतैरवत्वसितग्रीवश्छागैर्न्यग्रोधश्चमसैः शल्मलिर्वृद्ध्या
।
एष स्य राथ्यो वृषा पड्भिश्चतुर्भिरेदगन्ब्रह्मा कृष्णश्च नोवतु नमोग्नये
१३

सᳬशितो रश्मिना रथः सᳬशितो रश्मिना हयः ।

सꣳशितोऽअप्स्वप्सुजा ब्रह्मा सोमपुरोगवः १४

स्वयँवाजिँस्तन्वङ्कल्पयस्व स्वयँयजस्व स्वयञ्जुषस्व ।
महिमा तेन्येन न सन्नशे १५

न वाऽउऽएतन्म्रियसे न रिष्यसि देवाꣳ॥ऽइदेषि पथिभिः सुगेभिः ।
यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता दधातु १६

अग्निः पशुरासीत्तेनायजन्त सऽएतँल्लोकमजयद्यस्मिन्नग्निः स ते लोको भविष्यति तञ्जेष्यसि पिबैताऽअपः ।
वायुः पशुरासीत्तेनायजन्त सऽएतँल्लोकमजयद्यस्मिन्वायुः स ते लोको भविष्यति तञ्जेष्यसि पिबैताऽअपः ।
सूर्यः पशुरासीत्तेनायजन्त सऽएतँल्लोकमजयद्यस्मिन्त्सूर्यः स ते लोको भविष्यति तञ्जेष्यसि पिबैताऽअपः १७

प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहा ।
अम्बेऽअम्बिकेम्बालिके न मा नयति कश्चन ।
ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् १८

गणानान्त्वा गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे वसो मम ।
आहमजानि गर्भधमा त्वमजासि गर्भधम् १९

ताऽउभौ चतुरः पदः सम्प्रसारयाव स्वर्गे लोके प्रोर्णुवाथाँवृषा वाजी रेतोधा रेतो दधातु २०

उत्सक्थ्याऽअव गुदन्धेहि समञ्जिञ्चारया वृषन् ।
य स्त्रीणाञ्जीवभोजनः २१

यकासकौ शकुन्तिकाहलगिति वञ्चति ।
आहन्ति गभे पसो निगल्गलीति धारका २२

यकोसकौ शकुन्तकऽआहलगिति वञ्चति ।
विवक्षतऽइव ते मुखमध्वर्यो मा नस्त्वमभिभाषथाः २३

माता च ते पिता च तेग्रँवृक्षस्य रोहतः ।
प्रतिलामीति ते पिता गभे मुष्टिमतꣳसयत् २४

माता च ते पिता च तेग्रे वृक्षस्य क्रीडतः ।
विवक्षतऽइव ते मुखम्ब्रह्मन्मा त्वँवदो बहु २५

ऊर्ध्वामेनामुच्छ्रापय गिरौ भारꣳ हरन्निव ।
अथास्यै मध्यमेधताꣳ शीते वाते पुनन्निव २६

ऊर्ध्वमेनमुच्छ्रयताद्गिरौ भारꣳ हरन्निव ।
अथास्य मध्यमेजतु शीते वाते पुनन्निव २७

यदस्याऽअꣳहुभेद्याः कृधु स्थूलमुपातसत् ।
मुष्काविदस्याऽएजतो गोशफे शकुलाविव २८

यद्देवासो ललामगुम्प्र विष्टीमिनमाविषुः ।

सुक्थ्ना देदिश्यते नारी सुत्यस्याक्षिभुवो यथा २९

यद्धरिणो यवमत्ति न पुष्टम्पशु मन्यते ।
शूद्रा यदर्यजारा न पोषाय धनायति ३०

यद्धरिणो यवमत्ति न पुष्टम्बहु मन्यते ।
शूद्रो यदर्यायै जारो न पोषमनुमन्यते ३१

दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत्प्र णऽआयूꣳषि तारिषत् ३२

गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह ।
बृहत्युष्णिहा ककुप्सूचीभिः शम्यन्तु त्वा ३३

द्विपदा याश्चतुष्पदास्त्रिपदा याश्च षट्पदाः ।
विच्छन्दा याश्च सच्छन्दाः सूचीभिः शम्यन्तु त्वा ३४

महानाम्न्यो रेवत्यो विश्वाऽआशाः प्रभूवरीः ।
मैघीर्विद्युतो वाचः सूचीभिः शम्यन्तु त्वा ३५

नार्यस्ते पत्न्यो लोम विचिन्वन्तु मनीषया ।
देवानाम्पत्न्यो दिशः सूचीभिः शम्यन्तु त्वा ३६

रजता हरिणीः सीसा युजो युज्यन्ते कर्मभिः ।
अश्वस्य वाजिनस्त्वचि सिमाः शम्यन्तु शम्यन्तीः ३७

कुविदङ्ग यवमन्तो यवञ्चिद्यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषाङ्कृणुहि भोजनानि ये बर्हिषो नमऽउक्तिँयजन्ति ३८

कस्त्वाच्छ्यति कस्त्वा विशास्ति कस्ते गात्राणि शम्यति ।
कऽउ ते शमिता कविः ३९

ऋतवस्तऽऋतुथा पर्व शमितारो विशासतु ।
सँवत्सरस्य तेजसा शमीभिः शम्यन्तु त्वा ४०

अर्धमासाः परूँषि ते मासाऽआच्छ्यन्तु शम्यन्तः ।
अहोरात्राणि मरुतो विलिष्टँ सूदयन्तु ते ४१

दैव्याऽअध्वर्यवस्त्वाच्छ्यन्तु वि च शासतु ।
गात्राणि पर्वशस्ते सिमाः कृण्वन्तु शम्यन्तीः ४२

द्यौस्ते पृथिव्यन्तरिक्षँवायुश्छिद्रम्पृणातु ते ।
सूर्यस्ते नक्षत्रैः सह लोकङ्कृणोतु साधुया ४३

शन्ते परेभ्यो गात्रेभ्यः शमस्त्ववरेभ्यः ।
शमस्थभ्यो मज्जभ्यः शम्वस्तु तन्वै तव ४४

कः स्विदेकाकी चरति कऽउ स्विज्जायते पुनः ।
किँ स्विद्धिमस्य भेषजङ्किम्वावपनम्महत् ४५

सूर्यऽएकाकी चरति चन्द्रमा जायते पुनः ।
अग्निर्हिमस्य भेषजम्भूमिरावपनम्महत् ४६

किँ स्वित्सूर्यसमञ्ज्योतिः किꣳ समुद्रसमꣳ सरः ।
किँ स्वित्पृथिव्यै वर्षीयः कस्य मात्रा न विद्यते ४७

ब्रह्म सूर्यसमञ्ज्योतिर्द्यौः समुद्रसमꣳ सरः ।
इन्द्रः पृथिव्यै वर्षीयान्गोस्तु मात्रा न विद्यते ४८

पृच्छामि त्वा चितये देवसख यदि त्वमत्र मनसा जगन्थ ।
येषु विष्णुस्त्रिषु पदेष्वेष्टस्तेषु विश्वम्भुवनमाविवेशा३ ४९

अपि तेषु त्रिषु पदेष्वस्मि येषु विश्वम्भुवनमाविवेश ।
सद्यः पर्येमि पृथिवीमुत द्यामेकेनाङ्गेन दिवोऽअस्य पृष्ठम् ५०

केष्वन्तः पुरुषऽआविवेश कान्यन्तः पुरुषेऽअर्पितानि ।
एतद्ब्रह्मन्नुपवल्हामसि त्वा किँ स्विन्नः प्रतिवोचास्यत्र ५१

पञ्चस्वन्तः पुरुषऽआविवेश तान्यन्तः पुरुषेऽअर्पितानि ।
एतत्त्वात्र प्रतिमन्वानोऽअस्मि न मायया भवस्युत्तरो मत् ५२

का स्विदासीत्पूर्वचित्तिः किँ स्विदासीद्बृहद्वयः ।
का स्विदासीत्पिलिप्पिला का स्विदासीत्पिशङ्गिला ५३

द्यौरासीत्पूर्वचित्तिरश्वऽआसीद्बृहद्वयः ।
अविरासीत्पिलिप्पिला रात्रिरासीत्पिशङ्गिला ५४

काऽईमरे पिशङ्गिला काऽईङ्कुरुपिशङ्गिला ।

कऽईमास्कन्दमर्षति कऽईम्पन्थांविसर्पति ५५

अजारे पिशङ्गिला श्वावित्कुरुपिशङ्गिला ।
शशऽआस्कन्दमर्षत्यहिः पन्थांविसर्पति ५६

कत्यस्य विष्ठाः कत्यक्षराणि कति होमासः कतिधा समिद्धः ।
यज्ञस्य त्वा विदथा पृच्छमत्र कति होतारऽऋतुशो यजन्ति ५७

षडस्य विष्ठाः शतमक्षराण्यशीतिर्होमाः समिधो ह तिस्रः ।
यज्ञस्य ते विदथा प्रब्रवीमि सप्त होतारऽऋतुशो यजन्ति ५८

कोऽअस्य वेद भुवनस्य नाभिङ्को द्यावापृथिवीऽअन्तरिक्षम् ।
कः सूर्यस्य वेद बृहतो जनित्रङ्को वेद चन्द्रमसँयतोजाः ५९

वेदाहमस्य भुवनस्य नाभिँवेद द्यावापृथिवीऽअन्तरिक्षम् ।
वेद सूर्यस्य बृहतो जनित्रमथो वेद चन्द्रमसँयतोजाः ६०

पृच्छामि त्वा परमन्तम्पृथिव्याः पृच्छामि यत्र भुवनस्य नाभिः ।
पृच्छामि त्वा वृष्णोऽअश्वस्य रेतः पृच्छामि वाचः परमँव्योम ६१

इयँवेदिः परोऽअन्तः पृथिव्याऽअयँयज्ञो भुवनस्य नाभिः ।
अयꣳ सोमो वृष्णोऽअश्वस्य रेतो ब्रह्मायँवाचः परमँव्योम ६२

सुभूः स्वयम्भूः प्रथमोन्तर्महत्यर्णवे ।
दधे ह गर्भमृत्वियँयतो जातः प्रजापतिः ६३

होता यक्षत्प्रजापतिꣳ सोमस्य महिम्नः ।
जुषताम्पिबतु सोमꣳ होतर्यज ६४

प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नोऽअस्तु वयꣳ स्याम पतयो रयीणाम् ६५
इति त्रयोविंशोऽध्यायः

# अथ चतुर्विंशोऽध्यायः

अश्वस्तूपरो गोमृगस्ते प्राजापत्याः कृष्णग्रीवऽआग्नेयो रराटे
पुरस्तात्सारस्वती मेष्यधस्ताद्धन्वोराश्विनावधोरामौ बाह्वोः
सौमापौष्णः श्यामो नाभ्याँ सौर्ययामौ श्वेतश्च कृष्णश्च
पार्श्वयोस्त्वाष्ट्रौ लोमशसक्थौ सक्थ्योर्वायव्यः श्वेतः पुच्छऽइन्द्राय
स्वपस्याय वेहद्वैष्णवो वामनः १

रोहितो धूम्ररोहितः कर्कन्धुरोहितस्ते सौम्या बभ्रुररुणबभ्रुः
शुकबभ्रुस्ते वारुणाः शितिरन्ध्रोऽन्यतःशितिरन्ध्रः समन्तशितिरन्ध्रस्ते
सावित्राः शितिबाहुरन्यतःशितिबाहुः समन्तशितिबाहुस्ते
बार्हस्पत्याः पृषती क्षुद्रपृषती स्थूलपृषती ता मैत्रावरुण्यः २

शुद्धवालः सर्वशुद्धवालो मणिवालस्तऽआश्विनाः श्येतः
श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णा यामाऽअवलिप्ता रौद्रा
नभोरूपाः पार्जन्याः ३

पृश्निस्तिरश्चीनपृश्निरूर्ध्वपृश्निस्ते मारुताः फल्गूर्लोहितोर्णी पलक्षी
ताः सारस्वत्यः प्लीहाकर्णः शुण्ठाकर्णोऽध्यालोहकर्णस्ते त्वाष्ट्राः
कृष्णग्रीवः शितिकक्षोऽञ्जिसक्थस्तऽऐन्द्राग्नाः
कृष्णाञ्जिरल्पाञ्जिर्महाञ्जिस्तऽउषस्याः ४

शिल्पा वैश्वदेव्यो रोहिण्यस्त्र्यवयो वाचेऽविज्ञाताऽअदित्यै सरूपा
धात्रे वत्सतर्यो देवानाम्पत्नीभ्यः ५

कृष्णग्रीवाऽआग्नेयाः शितिभ्रवो वसूनाँ रोहिता रुद्राणाँ

श्वेताऽअ॑वरोकिणी॑ऽआदित्यानान्नभोरूपाः पार्जन्याः ६

उन्नतऽऋषभो वामनस्तऽऐन्द्रावैष्णवाऽउन्नतः शितिबाहुः
शितिपृष्ठस्तऽऐन्द्राबार्हस्पत्याः शुकरूपा वाजिनाः
कल्माषा॑ऽआग्निमारुताः श्यामाः पौष्णाः ७

एताऽऐन्द्राग्ना द्विरूपाऽअग्नीषोमीया वामनाऽअनड्वाहऽआग्नावैष्णवा
वशा मैत्रावरुण्यन्यतऽएन्यो मैत्र्यः ८

कृष्णग्रीवाऽआग्नेया बभ्रवः सौम्याः श्वेता
वायव्याऽअविज्ञाताऽअदित्यै सरूपा धात्रे वत्सतर्यो
देवानाम्पत्नीभ्यः ९

कृष्णा भौमा धूम्राऽआन्तरिक्षा बृहन्तो दिव्याः शबला वैद्युताः
सिध्मास्तारकाः १०

धूम्रान्वसन्तायालभते श्वेतान्ग्रीष्माय कृष्णान्वर्षाभ्योरुणाञ्छरदे पृषतो
हेमन्ताय पिशङ्गाञ्छिशिराय ११

त्र्यवयो गायत्र्यै पञ्चावयस्त्रिष्टुभे दित्यवाहो जगत्यै
त्रिवत्साऽअनुष्टुभे तुर्यवाहऽउष्णिहे १२

पष्ठवाहो विराजऽउक्षाणो बृहत्याऽऋषभाः ककुभेनड्वाहः पङ्क्त्यै
धेनवोतिच्छन्दसे १३

कृष्णग्रीवाऽआग्नेया बभ्रवः सौम्याऽउपध्वस्ताः सावित्रा वत्सतर्यः

सारस्वत्यः श्यामाः पौष्णाः पृश्नयो मारुता बहुरूपा वैश्वदेवा वशा द्यावापृथिवीयाः १४

उक्ताः संचराऽएताऽऐन्द्राग्नाः कृष्णा वारुणाः पृश्नयो मारुताः कायास्तूपराः १५

अग्नयेनीकवते प्रथमजानालभते मरुद्भ्यः सान्तपनेभ्यः सवात्यान्मरुद्भ्यो गृहमेधिभ्यो बष्किहान्मरुद्भ्यः क्रीडिभ्यः सꣳसृष्टान्मरुद्भ्यः स्वतवद्भ्योनुसृष्टान् १६

उक्ताः संचराऽएताऽऐन्द्राग्नाः प्राशृङ्गा माहेन्द्रा बहुरूपा वैश्वकर्मणाः १७

धूम्रा बभ्रुनीकाशाः पितृणाꣳ सोमवताम्बभ्रवो धूम्रनीकाशाः पितृणाम्बर्हिषदाङ्कृष्णा बभ्रुनीकाशाः पितृणामग्निष्वात्तानाङ्कृष्णाः पृषन्तस्त्रैयम्बकाः १८

उक्ताः संचराऽएताः शुनासीरीयाः श्वेता वायव्याः श्वेताः सौर्याः १९

वसन्ताय कपिञ्जलानालभते ग्रीष्माय कलविङ्कान्वर्षाभ्यस्तित्तिरीञ्छरदे वर्त्तिका हेमन्ताय ककराञ्छिशिराय विककरान् २०

समुद्राय शिशुमारानालभते पर्जन्याय मण्डूकानद्भ्यो मत्स्यान्मित्राय कुलीपयान्वरुणाय नाक्रान् २१

सोमाय हꣳसानालभते वायवे बलाकाऽइन्द्राग्निभ्याङ्क्रुञ्चान्मित्राय
मद्गून्वरुणाय चक्रवाकान् २२

अग्नये कुटरूनालभते
वनस्पतिभ्यऽउलूकानग्नीषोमाभ्याञ्चाषानश्विभ्याम्मयूरान्मित्रावरुणाभ्
याङ्कपोतान् २३

सोमाय लबानालभते त्वष्ट्रे कौलीकान्गोषादीर्देवानाम्पत्नीभ्यः
कुलीका देवजामिभ्योग्नये गृहपतये पारुष्णान् २४

अह्ने पारावतानालभते रात्र्यै सीचापूरहोरात्रयोः सन्धिभ्यो
जतूर्मासेभ्यो दात्यौहान्त्सँवत्सराय महतः सुपर्णान् २५

भूम्याऽआखूनालभतेन्तरिक्षाय पाङ्क्त्रान्दिवे कशान्दिग्भ्यो
नकुलान्बभ्रुकानवान्तरदिशाभ्यः २६

वसुभ्यऽऋश्यानालभते रुद्रेभ्यो रुरूनादित्येभ्यो न्यङ्कून्विश्वेभ्यो
देवेभ्यः पृषतान्त्साध्येभ्यः कुलुङ्गान् २७

ईशानाय परस्वतऽआलभते मित्राय गौरान्वरुणाय महिषान्बृहस्पतये
गवयाँस्त्वष्ट्रऽउष्ट्रान् २८

प्रजापतये पुरुषान्हस्तिनऽआलभते वाचे प्लुषीँश्चक्षुषे मशकाञ्छ्रोत्राय
भृङ्गाः २९

प्रजापतये च वायवे च गोमृगो वरुणायारण्यो मेषो यमाय कृष्णो मनुष्यराजाय मर्कटः शार्दूलाय रोहिदृषभाय गवयी क्षिप्रश्येनाय वर्तिका नीलङ्गोः क्रिमिः समुद्राय शिशुमारो हिमवते हस्ती ३०

मयुः प्राजापत्यऽउलो हलिक्ष्णो वृषदꣳशस्ते धात्रे दिशाङ्कङ्को धुङ्क्षाग्नेयी कलविङ्को लोहिताहिः पुष्करसादस्ते त्वाष्ट्रा वाचे क्रुञ्चः ३१

सोमाय कुलुङ्गऽआरण्योजो नकुलः शका ते पौष्णाः क्रोष्टा मायोरिन्द्रस्य गौरमृगः पिद्वो न्यङ्कुः कक्कटस्तेनुमत्यै प्रतिश्रुत्कायै चक्रवाकः ३२

सौरी बलाका शार्गः सृजयः शयाण्डकस्ते मैत्राः सरस्वत्यै शारिः पुरुषवाक्श्वाविद्भौमी शार्दूलो वृकः पृदाकुस्ते मन्यवे सरस्वते शुकः पुरुषवाक् ३३

सुपर्णः पार्जन्यऽआतिर्वाहसो दर्विदा ते वायवे बृहस्पतये वाचस्पतये पैङ्गराजोलजऽआन्तरिक्षः प्लवो मद्गुर्मत्स्यस्ते नदीपतये द्यावापृथिवीयः कूर्मः ३४

पुरुषमृगश्चन्द्रमसो गोधा कालका दार्वाघाटस्ते वनस्पतीनाङ्कृकवाकुः सावित्रो हꣳसो वातस्य नाक्रो मकरः कुलीपयस्तेकूपारस्य ह्रियै शल्यकः ३५

एण्यह्नो मण्डूको मूषिका तित्तिरिस्ते सर्पाणाँल्लोपाशऽआश्विनः कृष्णो रात्र्याऽऋक्षो जतूः सुषिलीका तऽइतरजनानाञ्जहका वैष्णवी

३६

अन्यवापोर्धमासानामृश्यो मयूरः सुपर्णास्ते गन्धर्वाणामपामुद्रो मासाङ्कश्यपो रोहित्कुण्डृणाची गोलत्तिका तेप्सरसाम्मृत्यवेसितः ३७

वर्षाहूर्ऋतूनामाखुः कशो मान्थालस्ते पितृणाम्बलायाजगरो वसूनाङ्कपिञ्जलः कपोतऽउलूकः शशस्ते निर्ऋत्यै वरुणायारण्यो मेषः ३८

श्वित्रऽआदित्यानामुष्ट्रो घृणीवान्वाध्रीनसस्ते मत्याऽअरण्याय सृमरो रुरू रौद्रः क्वयिः कुटरुर्दात्यौहस्ते वाजिनाङ्कामाय पिकः ३९

खड्गो वैश्वदेवः श्वा कृष्णः कर्णो गर्दभस्तरक्षुस्ते रक्षसामिन्द्राय सूकरः सिꣳहो मारुताः कृकलासः पिप्पका शकुनिस्ते शरव्यायै विश्वेषान्देवानाम्पृषतः ४०

इति चतुर्विंशोऽध्यायः

# अथ पञ्चविंशोऽध्यायः

शादन्दद्भिरवकान्दन्तमूलैर्मृदम्बस्वैस्तेगान्दꣳष्ट्राभ्याꣳ
सरस्वत्याऽअग्रजिह्वञ्जिह्वायाऽउत्सादमवक्रन्देन तालु वाजꣳ
हनुभ्यामपऽआस्येन वृषणमाण्डाभ्यामादित्याँश्मश्रुभिः
पन्थानम्भ्रूभ्यान्द्यावापृथिवी वर्तोभ्याँविद्युतङ्कनीनकाभ्याꣳ शुक्लाय
स्वाहा कृष्णाय स्वाहा पार्याणि पक्ष्माण्यवार्याऽइक्षवोवार्याणि
पक्ष्माणि पार्याऽइक्षवः १

वातम्प्राणेनापानेन नासिकेऽउपयाममधरेणौष्ठेन सदुत्तरेण
प्रकाशेनान्तरमनूकाशेन बाह्यन्निवेष्पम्मूर्ध्ना
स्तनयित्नुन्निर्बाधेनाशनिम्मस्तिष्केण विद्युतङ्कनीनकाभ्याङ्कर्णाभ्याꣳ
श्रोत्रꣳ श्रोत्राभ्याङ्कर्णौ तेदनीमधरकण्ठेनापः शुष्ककण्ठेन
चित्तम्मन्याभिरदितिꣳ शीर्ष्णा निर्ऋतिन्निर्जर्जल्येन शीर्ष्णा
सङ्क्रोशैः प्राणान्रेष्माणꣳ स्तुपेन २

मशकान्केशैरिन्द्रꣳ स्वपसा वहेन बृहस्पतिꣳ शकुनिसादेन
कूर्माञ्छफैराक्रमणꣳ स्थूराभ्यामृक्षलाभिः
कपिञ्जलाञ्जवञ्जङ्घाभ्यामध्वानम्बाहुभ्याञ्जाम्बीलेनारण्यमग्निमतिरुग्भ
याम्पूषणन्दोर्भ्यामश्विनावꣳसाभ्याꣳ रुद्रꣳ रोराभ्याम् ३

अग्नेः पक्षतिर्वायोर्निपक्षतिरिन्द्रस्य तृतीया सोमस्य चतुर्थ्यदित्यै
पञ्चमीन्द्राण्यै षष्ठी मरुताꣳ सप्तमी बृहस्पतेरष्टम्यर्यम्णो नवमी
धातुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यमस्य त्रयोदशी ४

इन्द्राग्न्योः पक्षतिः सरस्वत्यै निपक्षतिर्मित्रस्य तृतीयापाञ्चतुर्थी

निर्ऋत्यै पञ्चम्यग्नीषोमयोः षष्ठी सर्पाणाँ सप्तमी विष्णोरष्टमी पूष्णो नवमी त्वष्टुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यम्यै त्रयोदशी द्यावापृथिव्योर्दक्षिणम्पार्श्वँविश्वेषान्देवानामुत्तरम् ५

मरुताँ स्कन्धा विश्वेषान्देवानाम्प्रथमा कीकसा रुद्राणान्द्वितीयादित्यानान्तृतीया वायोः पुच्छमग्नीषोमयोर्भासदौ क्रुञ्चौ
श्रोणिभ्यामिन्द्राबृहस्पतीऽऊरुभ्याम्मित्रावरुणावल्गाभ्यामाक्रमणँ स्थूराभ्याम्बलङ्कुष्ठाभ्याम् ६

पूषणँवनिष्ठुनान्धाहीन्त्स्थूलगुदया सर्पान्गुदाभिर्विह्रुतऽआन्त्रैरपो वस्तिना वृषणमाण्डाभ्याँवाजिनꣳ शेपेन प्रजाँ रेतसा चाषान्पित्तेन प्रदरान्पायुना कूश्माञ्छकपिण्डैः ७

इन्द्रस्य क्रोडोदित्यै पाजस्यन्दिशाञ्जत्रवोदित्यै भसञ्जीमूतान्हृदयौपशेनान्तरिक्षम्पुरीतता नभऽउदर्येण चक्रवाकौ मतस्नाभ्यान्दिवँवृक्काभ्याङ्गिरीन्प्लाशिभिरुपलान्प्लीह्ना वल्मीकान्क्लोमभिग्लौभिर्गुल्मान्हिराभिः स्रवन्तीर्ह्रदान्कुक्षिभ्याँ समुद्रमुदरेण वैश्वानरम्भस्मना ८

विधृतिन्नाभ्या घृतꣳ रसेनापो यूष्णा मरीचीर्विप्रुड्भिर्नीहारमूष्मणा शीनँवसया प्रुष्वाऽअश्रुभिर्ह्रादुनीर्दूषीकाभिरस्ना रक्षाँसि चित्राण्यङ्गैर्नक्षत्राणि रूपेण पृथिवीन्त्वचा जुम्बकाय स्वाहा ९

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ।
स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम १०

यः प्राणतो निमिषतो महित्वैकऽइद्राजा जगतो बभूव ।
यऽईशेऽअस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम १९

यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳ रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम १२

यऽआत्मदा बलदा यस्य विश्वऽउपासते प्रशिषँयस्य देवाः ।
यस्य छायामृतँयस्य मृत्युः कस्मै देवाय हविषा विधेम १३

आ नो भद्राः क्रतवो यन्तु विश्वतोदब्धासोऽअपरीतासऽउद्भिदः ।
देवा नो यथा सदमिद्वृधेऽअसन्नप्रायुवो रक्षितारो दिवेदिवे १४

देवानाम्भद्रा सुमतिर्ऋजूयतान्देवानाꣳ रातिरभि नो निवर्तताम् ।
देवानाꣳ सख्यमुपसेदिमा वयन्देवा नऽआयुः प्रतिरन्तु जीवसे
१५

तान्पूर्वया निविदा हूमहे वयम्भगम्मित्रमदितिन्दक्षमस्रिधम् ।
अर्यमणँवरुणꣳ सोममश्विना सरस्वती नः सुभगा मयस्करत् १६

तन्नो वातो मयोभु वातु भेषजन्तन्माता पृथिवी तत्पिता द्यौः ।
तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतन्धिष्णया युवम् १७

तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे वयम् ।
पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये १८

स्वस्ति नऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु १९

पृषदश्वा मरुतः पृश्निमातरः शुभँयावानो विदथेषु जग्मयः ।
अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवाऽअवसागमन्निह २०

भद्रङ्कर्णेभिः शृणुयाम देवा भद्रम्पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितँयदायुः २१

शतमिन्नु शरदोऽअन्ति देवा यत्रा नश्चक्रा जरसन्तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः २२

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवाऽअदितिः पञ्च जनाऽअदितिर्जातमदितिर्जनित्वम् २३

मा नो मित्रो वरुणोऽअर्यमायुरिन्द्रऽऋभुक्षा मरुतः परिख्यन् ।
यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि २४

यन्निर्णिजा रेक्णसा प्रावृतस्य रातिङ्गृभीताम्मुखतो नयन्ति ।
सुप्राङजो मेम्यद्विश्वरूपऽइन्द्रापूष्णोः प्रियमप्येति पाथः २५

एष च्छागः पुरोऽअश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः ।
अभिप्रियँयत्पुरोडाशमर्वता त्वष्टेदेनꣳ सौश्रवसाय जिन्वति २६

यद्धविष्यमृतुशो देवयानन्त्रिर्मानुषाः पर्यश्वन्नयन्ति ।
अत्रा पूष्णः प्रथमो भागऽएति यज्ञन्देवेभ्यः प्रतिवेदयन्नजः २७

होताध्वर्युरावया ऽअग्निमिन्धो ग्रावग्राभ ऽउत शꣳस्ता सुविप्रः ।
तेन यज्ञेन स्वरङ्कृतेन स्विष्टेन वक्षणा ऽआपृणध्वम् २८

यूपव्रस्का ऽउत ये यूपवाहाश्चषालँये ऽअश्वयूपाय तक्षति ।
ये चार्वते पचनꣳ सम्भरन्त्युतो तेषामभिगूर्त्तिर्न ऽइन्वतु २९

उपप्रागात्सुमन्मेधायि मन्म देवानामाशा ऽउप वीतपृष्ठः ।
अन्वेनँविप्रा ऽऋषयो मदन्ति देवानाम्पुष्टे चकृमा सुबन्धुम् ३०

यद्वाजिनो दाम सन्दानमर्वतो या शीर्षण्या रशना रज्जुरस्य ।
यद्वा घास्य प्रभृतमास्ये तृणꣳ सर्वा ता तेऽअपि देवेष्वस्तु ३१

यदश्वस्य क्रविषो मक्षिकाश यद्वा स्वरौ स्वधितौ रिप्तमस्ति ।
यद्धस्तयोः शमितुर्यन्नखेषु सर्वा ता तेऽअपि देवेष्वस्तु ३२

यदूवध्यमुदरस्यापवाति यऽआमस्य क्रविषो गन्धोऽअस्ति ।
सुकृता तच्छमितारः कृण्वन्तूत मेधꣳ शृतपाकम्पचन्तु ३३

यत्ते गात्रादग्निना पच्यमानादभि शूलन्निहतस्यावधावति ।
मा तद्भूम्यामाश्रिषन्मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ३४

ये वाजिनम्परिपश्यन्ति पक्वँयऽईमाहुः सुरभिर्निर्हरेति ।
ये चार्वतो माꣳसभिक्षामुपासत ऽउतो तेषामभिगूर्त्तिर्न ऽइन्वतु ३५

यन्नीक्षणम्माँस्पचन्या ऽउखाया या पात्राणि यूष्ण ऽआसेचनानि ।

ऊष्मण्यापिधानी चरूणामङ्काः सूनाः परिभूषन्त्यश्वम् ३६

मा त्वाग्निर्ध्वनयीद्धूमगन्धिर्मोखा भ्राजन्त्यभिविक्त जघ्रिः ।
इष्टँवीतमभिगूर्त्तँवषट्कृतन्तन्देवासः प्रतिगृभ्णन्त्यश्वम् ३७

निक्रमणन्निषदनँविवर्तनँयच्च पड्वीशमर्वतः ।
यच्च पपौ यच्च घासिञ्जघास सर्वा ता तेऽअपि देवेष्वस्तु ३८

यदश्वाय वासऽउपस्तृणन्त्यधीवासँया हिरण्यान्यस्मै ।
सन्दानमर्वन्तम्पड्वीशम्प्रिया देवेष्वायामयन्ति ३९

यत्ते सादे महसा शूकृतस्य पार्ष्ण्या वा कशया वा तुतोद ।
स्रुचेव ता हविषोऽअध्वरेषु सर्वा ता ते ब्रह्मणा सूदयामि ४०

चतुस्त्रिँशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेति ।
अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या विशस्त ४१

एकस्त्वष्टुरश्वस्या विशस्ता द्वा यन्तारा भवतस्तथऽऋतुः ।
या ते गात्राणामृतुथा कृणोमि ताता पिण्डानाम्प्रजुहोम्यग्नौ ४२

मा त्वा तपत्प्रियऽआत्मापियन्तम्मा स्वधितिस्तन्वऽआतिष्ठिपत्ते ।
मा ते गृध्नुरविशस्तातिहाय छिद्रा गात्राण्यसिना मिथू कः ४३

न वाऽउऽएतन्म्रियसे न रिष्यसि देवाँ२॥ऽइदेषि पथिभिः सुगेभिः
।
हरी ते युञ्जा पृषतीऽअभूतामुपास्थाद्वाजी धुरि रासभस्य ४४

सुगव्यन्नो वाजी स्वश्व्यम्पुꣳसः पुत्राँ॥ऽउत विश्वापुषꣳ रयिम् ।
अनागास्त्वन्नोऽअदितिः कृणोतु क्षत्रन्नोऽअश्वो वनताꣳ हविष्मान्
४५

इमा नु कम्भुवना सीषधामेन्द्रश्च विश्वे च देवाः ।
आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यम्भेषजा करत् ।
यज्ञञ्च नस्तन्वञ्च प्रजाञ्चादित्यैरिन्द्रः सह सीषधाति ४६

अग्ने त्वन्नोऽअन्तमऽउत त्राता शिवो भवा वरूथ्यः ।
वसुरग्निर्वसुश्रवाऽअच्छा नक्षि द्युमत्तमꣳ रयिन्दाः ।
तन्त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ४७

इति पञ्चविंशोऽध्यायः

# अथ षड्विंशोऽध्यायः

अग्निश्च पृथिवी च सन्नते ते मे सन्नमतामदो वायुश्चान्तरिक्षञ्च सन्नते ते मे सन्नमतामदऽआदित्यश्च द्यौश्च सन्नते ते मे सन्नमतामदऽआपश्च वरुणश्च सन्नते ते मे सन्नमतामदः ।
सप्त सꣳसदोऽअष्टमी भूतसाधनी ।
सकामाँ२॥ऽअध्वनस्कुरु सञ्ज्ञानमस्तु मेमुना १

यथेमाँवाचङ्कल्याणीमावदानि जनेभ्यः ।
ब्रह्मराजन्याभ्याꣳ शूद्राय चार्याय च स्वाय चारणाय च ।
प्रियो देवानान्दक्षिणायै दातुरिह भूयासमयम्मे कामः समृध्यतामुप मादो नमतु २

बृहस्पतेऽअति यदर्योऽअर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवसऽऋतप्रजात तदस्मासु द्रविणन्धेहि चित्रम् ।
उपयामगृहीतोसि बृहस्पतये त्वैष ते योनिर्बृहस्पतये त्वा ३

इन्द्र गोमन्निहायाहि पिबा सोमꣳ शतक्रतो ।
विद्यद्भिर्ग्रावभिः सुतम् ।
उपयामगृहीतोसीन्द्राय त्वा गोमतऽएष ते योनिरिन्द्राय त्वा गोमते ४

इन्द्रायाहि वृत्रहन्पिबा सोमꣳ शतक्रतो ।
गोमद्भिर्ग्रावभिः सुतम् ।
उपयामगृहीतोसीन्द्राय त्वा गोमतऽएष ते योनिरिन्द्राय त्वा गोमते ५

ऋतावानंवैश्वानरमृतस्य ज्योतिषस्पतिम् ।
अजस्रङ्घर्ममीमहे ।
उपयामगृहीतोसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ६

वैश्वानरस्य सुमतौ स्याम राजा हि कम्भुवनानामभिश्रीः ।
इतो जातो विश्वमिदंविचष्टे वैश्वानरो यतते सूर्येण ।
उपयामगृहीतोसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ७

वैश्वानरो नऽऊतयऽआप्रयातु परावतः ।
अग्निरुक्थेन वाहसा ।
उपयामगृहीतोसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ८

अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः ।
तमीमहे महागयम् ।
उपयामगृहीतोस्यग्नये त्वा वर्चसऽएष ते योनिरग्नये त्वा वर्चसे ९

महाँ॥ऽइन्द्रो वज्रहस्तः षोडशी शर्म यच्छतु ।
हन्तु पाप्मानँयोस्मान्द्वेष्टि ।
उपयामगृहीतोसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा १०

तँवो दस्ममृतीषहँवसोर्मन्दानमन्धसः ।
अभि वत्सन्न स्वसरेषु धेनवऽइन्द्रङ्गीर्भिर्नवामहे ११

यद्वाहिष्ठन्तदग्नये बृहदर्च विभावसो ।
महिषीव त्वद्रयिस्त्वद्वाजाऽउदीरते १२

एह्यू षु ब्रवाणि तेऽग्नऽइत्थेतरा गिरः ।
एभिर्वर्धासऽइन्दुभिः १३

ऋतवस्ते यज्ञँवितन्वन्तु मासा रक्षन्तु ते हविः ।
सँवत्सरस्ते यज्ञन्दधातु नः प्रजाञ्च परिपातु नः १४

उपह्वरे गिरीणाꣳ सङ्गमे च नदीनाम् ।
धिया विप्रोऽअजायत १५

उच्चा ते जातमन्धसो दिवि सद्भूम्याददे ।
उग्रꣳ शर्म महि श्रवः १६

स नऽइन्द्राय यज्यवे वरुणाय मरुद्भ्यः ।
वरिवोवित्परिस्रव १७

एना विश्वान्यर्यऽआ द्युम्नानि मानुषाणाम् ।
सिषासन्तो वनामहे १८

अनु वीरैरनु पुष्यास्म गोभिरन्वश्वैरनु सर्वेण पुष्टैः ।
अनु द्विपदानु चतुष्पदा वयन्देवा नो यज्ञमृतुथा नयन्तु १९

अग्ने पत्नीरिहावह देवानामुशतीरुप ।
त्वष्टारꣳ सोमपीतये २०

अभि यज्ञङ्गृणीहि नो ग्नावो नेष्टः पिबऽऋतुना ।

त्वᳪ हि रत्नधाऽअसि २१

द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत ।
नेष्ट्रादृतुभिरिष्यत २२

तवायᳪ सोमस्त्वमेह्यर्वाङ्शश्वत्तमᳪ सुमनाऽअस्य पाहि ।
अस्मिन्यज्ञे बर्हिष्या निषद्या दधिष्वेमञ्जठरऽइन्दुमिन्द्र २३

अमेव नः सुहवाऽआ हि गन्तन नि बर्हिषि सदतना रणिष्टन ।
अथा मन्दस्व जुजुषाणोऽअन्धसस्त्वष्टर्देवेभिर्जनिभिः सुमद्गणः २४

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।
इन्द्राय पातवे सुतः २५

रक्षोहा विश्वचर्षणिरभि योनिमयोहते ।
द्रोणे सधस्थमासदत् २६

इति षड्विंशोऽध्यायः

# अथ सप्तविंशोऽध्यायः

समास्त्वाग्नऽऋतवो वर्धयन्तु सँवत्सराऽऋषयो यानि सत्या ।
सन्दिव्येन दीदिहि रोचनेन विश्वाऽआभाहि प्रदिशश्चतस्रः १

सञ्चेध्यस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय ।
मा च रिषदुपसत्ता तेऽअग्ने ब्रह्माणस्ते यशसः सन्तु मान्ये २

त्वामग्ने वृणते ब्राह्मणाऽइमे शिवोऽअग्ने सँवरणे भवा नः ।
सपत्नहा नोऽअभिमातिजिच्च स्वे गये जागृह्यप्रयुच्छन् ३

इहैवाग्नेऽअधिधारया रयिम्मा त्वा निक्रन्पूर्वचितो निकारिणः ।
क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतान्तेऽअनिष्टृतः ४

क्षत्रेणाग्ने स्वायुः सꣳरभस्व मित्रेणाग्ने मित्रधेये यतस्व ।
सजातानाम्मध्यमस्थाऽएधि राज्ञामग्ने विहव्यो दीदिहीह ५

अति निहोऽअति स्रिधोत्यचित्तिमत्यरातिमग्ने ।
विश्वा ह्यग्ने दुरिता सहस्वाथास्मभ्यꣳ सहवीराꣳ रयिन्दाः ६

अनाधृष्यो जातवेदाऽअनिष्टृतो विराडग्ने क्षत्रभृद्दीदिहीह ।
विश्वाऽआशाः प्रमुञ्चन्मानुषीर्भयः शिवेभिरद्य परिपाहि नो वृधे ७

बृहस्पते सवितर्बोधयैनꣳ सꣳशितञ्चित्सन्तराꣳ सꣳशिशाधि ।
वर्धयैनम्महते सौभगाय विश्वऽएनमनुमदन्तु देवाः ८

अमुत्रभूयादध यद्यमस्य बृहस्पतेऽअभिशस्तेरमुञ्चः ।

प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः ९

उद्वयन्तमसस्परि स्वः पश्यन्तऽउत्तरम् ।
देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् १०

ऊर्ध्वाऽअस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचीᳬष्यग्नेः ।
द्युमत्तमा सुप्रतीकस्य सूनोः ११

तनूनपादसुरो विश्ववेदा देवो देवेषु देवः ।
पथोऽअनक्तु मध्वा घृतेन १२

मध्वा यज्ञन्नक्षसे प्रीणानो नराशᳬसोऽअग्ने ।
सुकृद्देवः सविता विश्ववारः १३

अच्छायमेति शवसा घृतेनेडानो वह्निर्नमसा ।
अग्निᳬ स्रुचोऽअध्वरेषु प्रयत्सु १४

स यक्षदस्य महिमानमग्नेः सऽईम्मन्द्रा सुप्रयसः ।
वसुश्चेतिष्ठो वसुधातमश्च १५

द्वारो देवीरन्वस्य विश्वे व्रता ददन्तेऽअग्नेः ।
उरुव्यचसो धाम्ना पत्यमानाः १६

तेऽअस्य योषणे दिव्ये न योनाऽउषासानक्ता ।
इमँयज्ञमवतामध्वरन्नः १७

दैव्या होतारा ऽऊर्ध्वमध्वरन्नोग्नेर्जिह्वामभिगृणीतम् ।
कृणुतन्नः स्विष्टिम् १८

तिस्रो देवीर्बर्हिरेदꣳ सदन्त्विडा सरस्वती भारती ।
मही गृणाना १९

तन्नस्तुरीपमद्भुतम्पुरुक्षु त्वष्टा सुवीर्यम् ।
रायस्पोषँविष्यतु नाभिमस्मे २०

वनस्पतेवसृजा रराणस्त्मना देवेषु ।
अग्निर्हव्यꣳ शमिता सूदयाति २१

अग्ने स्वाहा कृणुहि जातवेदऽइन्द्राय हव्यम् ।
विश्वे देवा हविरिदञ्जुषन्ताम् २२

पीवोऽअन्ना रयिवृधः सुमेधाः श्वेतः सिषक्ति नियुतामभिश्रीः ।
ते वायवे समनसो वितस्थुर्विश्वेन्नरः स्वपत्यानि चक्रुः २३

राये नु यञ्जज्ञतू रोदसीमे राये देवी धिषणा धाति देवम् ।
अध वायुन्नियुतः सश्चत स्वाऽउत श्वेतँवसुधितिन्निरेके २४

आपो ह यद्बृहतीर्विश्वमायन्गर्भन्दधाना जनयन्तीरग्निम् ।
ततो देवानाꣳ समवर्ततासुरेकः कस्मै देवाय हविषा विधेम २५

यश्चिदापो महिना पर्यपश्यद्दक्षन्दधाना जनयन्तीर्यज्ञम् ।
यो देवेष्वधि देवऽएकऽआसीत्कस्मै देवाय हविषा विधेम २६

प्र याभिर्यासि दाश्वाꣳसमच्छा नियुद्भिर्वायविष्टये दुरोणे ।
नि नो रयिꣳ सुभोजसँयुवस्व नि वीरङ्गव्यमश्व्यञ्च राधः २७

आ नो नियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम् ।
वायोऽअस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिः सदा नः २८

नियुत्वान्वायवागह्ययꣳ शुक्रोऽअयामि ते ।
गन्तासि सुन्वतो गृहम् २९

वायो शुक्रोऽअयामि ते मध्वोऽअग्रन्दिविष्टिषु ।
आयाहि सोमपीतये स्पार्हो देव नियुत्वता ३०

वायुरग्रेगा यज्ञप्रीः साकङ्गन्मनसा यज्ञम् ।
शिवो नियुद्भिः शिवाभिः ३१

वायो ये ते सहस्रिणो रथासस्तेभिरागहि ।
नियुत्वान्त्सोमपीतये ३२

एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विꣳशती च ।
तिसृभिश्च वहसे त्रिꣳशता च नियुद्भिर्वायविह ता विमुञ्च ३३

तव वायवृतस्पते त्वष्टुर्जामातरद्भुत ।
अवाꣳस्यावृणीमहे ३४

अभि त्वा शूर नोनुमोदुग्धाऽइव धेनवः ।

ईशा॑नमुस्य जग॑तः स्वुर्दृशुमीशा॑नमिन्द्र तुस्थुषः॑ ३५

न त्वावाँ॑२॥ऽअुन्यो दि॒व्यो न पार्थि॑वो न जा॒तो न ज॑निष्यते ।
अुश्वा॒यन्तो॑ मघवन्निन्द्र वा॒जिनो॑ गु॒व्यन्त॑स्त्वा हवामहे ३६

त्वामिद्धि हवा॑महे सा॒तौ वाज॑स्य का॒रवः॑ ।
त्वाँवृ॒त्रेष्वि॑न्द्र सत्प॑तिन्नरु॒स्त्वाङ्काष्ठा॒स्वर्व॑तः ३७

स त्वन्न॑श्चित्र वज्रहस्त धृष्णु॒या मु॒ह स्त॑वा॒नोऽअ॑द्रिवः ।
गामश्व॑ꣳ र॒थ्य॒मिन्द्र॒ सङ्कि॑र स॒त्रा वाज॒न्न जि॒ग्यु॑षे ३८

कया॑ नश्चि॒त्रऽआभु॑वदू॒ती स॒दावृ॑धु॒ः सखा॑ ।
कया॒ शचि॑ष्ठया वृ॒ता ३९

कस्त्वा॑ स॒त्यो मदा॑ना॒म्मꣳहि॑ष्ठो मत्सु॒दन्ध॑सः ।
दृ॒ढा चि॑दा॒रुजे॒ वसु॑ ४०

अुभी षु णः॑ सखी॑नामवि॒ता ज॑रितॄ॒णाम् ।
शुतम्भ॑वास्यू॒तये॑ ४१

युज्ञाय॑ज्ञा वोऽअुग्नये॑ गि॒रागि॑रा च॒ दक्ष॑से ।
प्रप्र॑ वु॒यमु॒मृत॑ञ्जातवे॑दसम्प्रि॒यम्मि॒त्रन्न श॑ꣳसिषम् ४२

पा॒हि नो॑ऽअग्नऽएक॑या पा॒ह्यु॒त द्वि॒तीय॑या ।
पा॒हि गी॒र्भिस्ति॒सृभि॑रूर्जाम्पते पा॒हि च॑त॒सृभि॑र्वसो ४३

ऊर्जो नपा॑तु॒ꣳ स हि॒नायम॑स्म॒युर्दाशे॑म ह॒व्यदा॑तये ।
भुव॒द्वाजे॑ष्ववि॒ता भुव॑द्वृ॒धऽउ॒त त्रा॒ता त॒नूना॑म् ४४

सँ॒व॒त्स॒रो॒सि परिवत्स॒रो॒सीदावत्स॒रो॒सीद्वत्स॒रो॒सि वत्स॒रो॒सि ।
उ॒षस॑स्ते कल्पन्तामहोरा॒त्रास्ते॑ कल्पन्तामर्धमा॒सास्ते॑
कल्पन्ता॒म्मासा॑स्ते कल्पन्तामृ॒तव॑स्ते कल्पन्ताꣳ सँवत्स॒रस्ते॑
कल्पताम् ।
प्रेत्या॒ऽएत्यै॒ सञ्चाञ्च॒ प्र च॑ सारय ।
सु॒प॒र्ण॒चिद॑सि॒ तया॑ दे॒वत॑याङ्गिर॒स्वद्ध्रु॒वः सी॑द ४५

इति सप्तविंशोऽध्यायः

# अथाष्टाविंशोऽध्यायः

होता॑ यक्षत्स॒मिधेन्द्र॑मि॒डस्प॒दे नाभा॑ पृथि॒व्याऽअधि॑ ।
दि॒वो वर्ष्म॒न्त्समि॑ध्यत॒ऽओजि॑ष्ठश्चर्षणी॒सहां॒वेत्वाज्य॑स्य॒ होत॒र्यज॑ १

होता॑ यक्ष॒त्तनू॒नपा॑तमू॒तिभि॒र्जेता॑र॒मप॑राजितम् ।
इन्द्र॑न्दे॒वꣳ स्व॒र्विद॑म्प॒थिभि॒र्मधु॑मत्तमै॒र्नरा॒शꣳसे॑न॒ तेज॑सा॒ वेत्वाज्य॑स्य॒ होत॒र्यज॑ २

होता॑ यक्ष॒दिडा॑भि॒रिन्द्र॑मीडि॒तमा॒जुह्वा॑नु॒मम॑र्त्यम् ।
दे॒वो दे॒वैः सवी॑र्यो॒ वज्र॑हस्तः पुरन्द॒रो वेत्वाज्य॑स्य॒ होत॒र्यज॑ ३

होता॑ यक्षद्ब॒र्हिषीन्द्र॑न्निष॒द्वरं॑ वृष॒भन्नर्या॑पसम् ।
वसु॑भी रु॒द्रैरा॑दि॒त्यैः स॒युग्भि॑र्ब॒र्हिरास॑दद्वे॒त्वाज्य॑स्य॒ होत॒र्यज॑ ४

होता॑ यक्ष॒दोजो॒ न वी॒र्यꣳ सहो॒ द्वार॒ऽइन्द्र॑मवर्धयन् ।
सु॒प्रा॒य॒णाऽअ॒स्मिन्य॒ज्ञे विश्र॑यन्तामृता॒वृधो॒ द्वार॒ऽइन्द्रा॑य मी॒ढुषे॒
व्यन्त्वाज्य॑स्य॒ होत॒र्यज॑ ५

होता॑ यक्षदु॒षेऽइन्द्र॑स्य धे॒नू सु॒दुघे॑ मा॒तरा॑ म॒ही ।
स॒वा॒तरौ॒ न तेज॑सा व॒त्समिन्द्र॑मवर्धतां॒वी॒तामाज्य॑स्य॒ होत॒र्यज॑ ६

होता॑ यक्ष॒द्दैव्या॒ होता॑रा भि॒षजा॒ सखा॑या ह॒विषेन्द्र॑म्भिषज्यतः ।
क॒वी दे॒वौ प्रचे॑तसा॒विन्द्रा॑य धत्तऽइन्द्रि॒यं॒वी॒तामाज्य॑स्य॒ होत॒र्यज॑ ७

होता॑ यक्षत्ति॒स्रो दे॒वीर्न भे॑ष॒जन्त्रय॑स्त्रि॒धात॑वो॒पस॒ऽइडा॒ सर॑स्वती॒

भारती मुही॒ ।
इन्द्रपत्नीर्हुविष्मतीर्व्यन्त्वाज्यस्य होतुर्यज ८

होता यक्षुत्त्वष्टारमिन्द्रन्देवम्भिषजꣳ सुयजङ्घृतश्रियम् ।
पुरुरूपꣳ सुरेतसम्मघोनमिन्द्राय त्वष्टा दधदिन्द्रियाणि वेत्वाज्यस्य होतुर्यज ९

होता यक्षुद्वनस्पतिꣳ शमितारꣳ शतक्रतुन्धियो जोष्टारमिन्द्रियम् ।
मध्वा समञ्जन्पथिभिः सुगेभिः स्वदाति यज्ञम्मधुना घृतेन वेत्वाज्यस्य होतुर्यज १०

होता यक्षुदिन्द्रꣳ स्वाहाज्यस्य स्वाहा मेदसः स्वाहा स्तोकानाꣳ स्वाहा स्वाहाकृतीनाꣳ स्वाहा हव्यसूक्तीनाम् ।
स्वाहा देवाऽआज्यपा जुषाणाऽइन्द्रऽआज्यस्य व्यन्तु होतुर्यज ११

देवम्बर्हिरिन्द्रꣳ सुदेवन्देवैर्वीरवत्स्तीर्णवेद्यामवर्धयत् ।
वस्तोर्वृतम्प्राक्तोर्भृतꣳ राया बर्हिष्मतोत्यगाद्वसुवने वसुधेयस्य वेतु यज १२

देवीर्द्वारऽइन्द्रꣳ सङ्घाते वीड्वीर्यामन्नवर्धयन् ।
आ वत्सेन तरुणेन कुमारेण च मीवतापार्वाणꣳ रेणुकककाटन्नुदन्तांवसुवने वसुधेयस्य व्यन्तु यज १३

देवीऽउषासानक्तेन्द्रंयज्ञे प्रयत्यह्वेताम् ।
दैवीर्विशः प्रायासिष्टाꣳ सुप्रीते सुधिते वसुवने वसुधेयस्य वीतांयज १४

देवी जोष्ट्री वसुधिती देवमिन्द्रमवर्धताम् ।
अयाव्यन्याघा द्वेषाᳪस्यान्या वक्षद्वसु वार्याणि यजमानाय शिक्षिते वसुवने वसुधेयस्य वीतां यज १५

देवीऽऊर्जाहुती दुघे सुदुघे पयसेन्द्रमवर्धताम् ।
इषमूर्जमन्या वक्षत्सग्धिᳪ सपीतिमन्या नवेन पूर्वन्दयमाने पुराणेन नवमधातामूर्जमूर्जाहुतीऽऊर्जयमाने वसु वार्याणि यजमानाय शिक्षिते वसुवने वसुधेयस्य वीतां यज १६

देवा दैव्या होतारा देवमिन्द्रमवर्धताम् ।
हताघशᳪसावाभाष्टाँवसु वार्याणि यजमानाय शिक्षितौ वसुवने वसुधेयस्य वीतां यज १७

देवीस्तिस्रस्तिस्रो देवीः पतिमिन्द्रमवर्धयन् ।
अस्पृक्षद्भारती दिवᳪ रुद्रैर्यज्ञᳪ सरस्वतीडा वसुमती गृहान्वसुवने वसुधेयस्य व्यन्तु यज १८

देवऽइन्द्रो नराशᳪसस्त्रिवरूथस्त्रिबन्धुरो देवमिन्द्रमवर्धयत् ।
शतेन शितिपृष्ठानामाहितः सहस्रेण प्रवर्तते मित्रावरुणेदस्य होत्रमर्हतो बृहस्पति स्तोत्रमश्विनाध्वर्यवँवसुवने वसुधेयस्य वेतु यज १९

देवो देवैर्वनस्पतिर्हिरण्यपर्णो मधुशाखः सुपिप्पलो देवमिन्द्रमवर्धयत् ।
दिवमग्रेणास्पृक्षदान्तरिक्षम्पृथिवीमदृᳪहीद्वसुवने वसुधेयस्य वेतु

यजं २०

देवम्बुर्हिर्वारितीनान्देवमिन्द्रमवर्धयत् ।
स्वासुस्थमिन्द्रेणासन्नमुन्या बुर्हीऽंष्युभ्युभूद्वसुवने वसुधेयस्य वेतु
यजं २१

देवोऽग्निः स्विष्टकृद्देवमिन्द्रमवर्धयत् ।
स्विष्टङ्कुर्वन्स्विष्टकृत्स्विष्टमुद्य करोतु नो वसुवने वसुधेयस्य वेतु
यजं २२

अग्निमुद्य होतारमवृणीतायँयजमानः पचन्पक्तीः
पचन्पुरोडाशम्बुध्नन्निन्द्राय च्छागम् ।
सूपस्थाऽअद्य देवो वनस्पतिरभवदिन्द्राय च्छागेन ।
अघत्तम्मेदस्तः प्रतिपचताग्रभीदवीवृधत्पुरोडाशेन ।
त्वामुद्यऽऋषे २३
गलितमन्त्रः --
त्वामुद्यऽऋषऽआर्षेयऽऋषीणान्नपादवृणीतायँयजमानो बहुभ्युऽआ
सङ्गतेभ्यऽएष मे देवेषु वसु वार्यायक्ष्यतऽइति ता या देवा देव
दानान्यदुस्तान्यस्माऽआ च शास्वा च गुरस्वेषितश्च होतरसि
भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि ॥

होता यक्षत्समिधानम्महद्यशः सुसमिद्धँवरेण्यमुग्निमिन्द्रँवयोधसम्
।
गायत्रीञ्छन्दऽइन्द्रियन्त्र्यविङ्गाँवयो दधद्वेत्वाज्यस्य होतर्यज २४

होता यक्षत्तनूनपातमुद्भिदँयङ्गर्भमदितिर्दधे शुचिमिन्द्रँवयोधसम् ।

उष्णिहुञ्छन्दऽइन्द्रियन्दित्यवाहङ्गाँवयो दधुद्वेत्वाज्यस्य होतर्यज
२५

होता यक्षदीडेन्यमीडितँवृत्रहन्तममिडाभिरीडय्ँ सहः
सोममिन्द्रँवयोधसम् ।
अनुष्टुभुञ्छन्दऽइन्द्रियम्पञ्चाविङ्गाँवयो दधुद्वेत्वाज्यस्य होतर्यज २६

होता यक्षत्सुबर्हिषम्पूषण्वन्तममर्त्यँ सीदन्तम्बर्हिषि
प्रियेमृतेन्द्रँवयोधसम् ।
बृहतीञ्छन्दऽइन्द्रियन्त्रिवत्सङ्गाँवयो दधुद्वेत्वाज्यस्य होतर्यज २७

होता यक्षद्व्यचस्वतीः सुप्रायणाऽऋतावृधो द्वारो
देवीर्हिरण्ययीर्ब्रह्माणमिन्द्रँ वयोधसम् ।
पङ्क्तिञ्छन्दऽइहेन्द्रियन्तुर्यवाहङ्गाँवयो दधुद्व्यन्त्वाज्यस्य होतर्यज २८

होता यक्षत्सुपेशसा सुशिल्पे बृहतीऽउभे नक्तोषासा न दर्शते
विश्वमिन्द्रँवयोधसम् ।
त्रिष्टुभुञ्छन्दऽइहेन्द्रियम्पष्ठवाहङ्गाँवयो दधद्वीतामाज्यस्य होतर्यज
२९

होता यक्षत्प्रचेतसा देवानामुत्तमँयशो होतारा दैव्या कवी
सयुजेन्द्रँवयोधसम् ।
जगतीञ्छन्दऽइन्द्रियमनड्वाहङ्गाँवयो दधद्वीतामाज्यस्य होतर्यज ३०

होता यक्षत्पेशस्वतीस्तिस्रो देवीर्हिरण्ययीर्भारतीर्बृहतीर्महीः
पतिमिन्द्रँवयोधसम् ।

विराजुञ्छन्दऽइहेन्द्रियन्धेनुङ्गान्न वयो दधद्व्यन्त्वाज्यस्य होतर्यज
३१

होता यक्षत्सुरेतसन्त्वष्टारम्पुष्टिवर्धनꣳ रूपाणि
बिभ्रतम्पृथक्पुष्टिमिन्द्रँवयोधसम् ।
द्विपदञ्छन्दऽइन्द्रियमुक्षाणङ्गान्न वयो दधद्वेत्वाज्यस्य होतर्यज ३२

होता यक्षद्वनस्पतिꣳ शमितारꣳ शतक्रतुꣳ हिरण्यपर्णमुक्थिनꣳ
रशनाम्बिभ्रतँवशिम्भगमिन्द्रँवयोधसम् ।
ककुभञ्छन्दऽइहेन्द्रियँवशाँवेहतङ्गाँवयो दधद्वेत्वाज्यस्य होतर्यज
३३

होता
यक्षत्स्वाहाकृतीरग्निङ्गृहपतिम्पृथग्वरुणम्भेषजङ्कविङ्क्षत्रमिन्द्रँवयोधस
म् ।
अतिच्छन्दसञ्छन्दऽइन्द्रियम्बृहदृषभङ्गाँवयो दधद्व्यन्त्वाज्यस्य
होतर्यज ३४

देवम्बर्हिर्वयोधसन्देवमिन्द्रमवर्धयत् ।
गायत्र्या छन्दसेन्द्रियञ्चक्षुरिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज
३५

देवीर्द्वारो वयोधसꣳ शुचिमिन्द्रमवर्धयन् ।
उष्णिहा च्छन्दसेन्द्रियम्प्राणमिन्द्रे वयो दधद्वसुवने वसुधेयस्य व्यन्तु
यज ३६

देवीऽउषासानक्ता देवमिन्द्रँवयोधसन्देवी देवमवर्धताम् ।
अनुष्टुभा च्छन्दसेन्द्रियम्बलमिन्द्रे वयो दधद्वसुवने वसुधेयस्य
वीतांयज ३७

देवी जोष्ट्री वसुधिती देवमिन्द्रँवयोधसन्देवी देवमवर्धताम् ।
बृहत्या च्छन्दसेन्द्रियँ श्रोत्रमिन्द्रे वयो दधद्वसुवने वसुधेयस्य
वीतांयज ३८

देवीऽऊर्जाहुती दुघे सुदुघे पयसेन्द्रँवयोधसन्देवी देवमवर्धताम् ।
पङ्क्त्या च्छन्दसेन्द्रियꣳ शुक्रमिन्द्रे वयो दधद्वसुवने वसुधेयस्य
वीतांयज ३९

देवा दैव्या होतारा देवमिन्द्रँवयोधसन्देवौ देवमवर्धताम् ।
त्रिष्टुभा च्छन्दसेन्द्रियन्त्विषिमिन्द्रे वयो दधद्वसुवने वसुधेयस्य
वीतांयज ४०

देवीस्तिस्रस्तिस्रो देवीर्वयोधसम्पतिमिन्द्रमवर्धयन् ।
जगत्या च्छन्दसेन्द्रियꣳ शूषमिन्द्रे वयो दधद्वसुवने वसुधेयस्य व्यन्तु
यज ४१

देवो नराशꣳसो देवमिन्द्रँवयोधसन्देवो देवमवर्धयत् ।
विराजा च्छन्दसेन्द्रियꣳ रूपमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु
यज ४२

देवो वनस्पतिर्देवमिन्द्रँवयोधसन्देवो देवमवर्धयत् ।
द्विपदा च्छन्दसेन्द्रियम्भगमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज

४३

देवम्बुर्हिर्वारितीनान्देवमिन्द्रँवयोधसन्देवन्देवमवर्धयत् ।
कुकुभा च्छन्दसेन्द्रियँयशऽइन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु
यज ४४

देवोऽअग्निः स्विष्टकृद्देवमिन्द्रँवयोधसन्देवो देवमवर्धयत् ।
अतिच्छन्दसा च्छन्दसेन्द्रियङ्क्षत्रमिन्द्रे वयो दधद्वसुवने वसुधेयस्य
वेतु यज ४५

अग्निमद्य होतारमवृणीतायँयजमानः पचन्पक्तीः
पचन्पुरोडाशम्बध्नन्निन्द्राय वयोधसे च्छागम् ।
सूपस्थाऽअद्य देवो वनस्पतिरभवदिन्द्राय वयोधसे च्छागेन ।
अघत्तम्मेदस्तः प्रतिपचताग्रभीदवीवृधत्पुरोडाशेन ।
त्वामद्यऽऋषे ४६
गलितमन्त्रः --
त्वामद्यऽऋषऽआर्षेयऽऋषीणान्नपादवृणीतायँयजमानो बहुभ्यऽआ
सङ्गतेभ्यऽएष मे देवेषु वसु वार्यायक्ष्यतऽइति ता या देवा देव
दानान्यदुस्तान्यस्माऽआ च शास्वा च गुरस्वेषितश्च होतरसि
भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि ॥
इत्यष्टाविंशोऽध्यायः

## अथैकोनत्रिंशोऽध्यायः

समिद्धोऽअञ्जन्कृदरम्मतीनाङ्घृतमग्ने मधुमत्पिन्वमानः ।
वाजी वहन्वाजिनञ्जातवेदो देवानाँवक्षि प्रियमा सधस्थम् १

घृतेनाञ्जन्त्सम्पथो देवयानान्प्रजानन्वाज्यप्येतु देवान् ।
अनु त्वा सप्ते प्रदिशः सचन्ताꣳ स्वधामस्मै यजमानाय धेहि २

ईड्यश्चासि वन्द्यश्च वाजिन्नाशुश्चासि मेध्यश्च सप्ते ।
अग्निष्ट्वा देवैर्वसुभिः सजोषाः प्रीतँवह्निँवहतु जातवेदाः ३

स्तीर्णम्बर्हिः सुष्टरीमा जुषाणोरु पृथु प्रथमानम्पृथिव्याम् ।
देवेभिर्युक्तमदितिः सजोषाः स्योनङ्कृण्वाना सुविते दधातु ४

एताऽउ वः सुभगा विश्वरूपा वि पक्षोभिः श्रयमाणाऽउदातैः ।
ऋष्वाः सतीः कवषः शुम्भमाना द्वारो देवीः सुप्रायणा भवन्तु ५

अन्तरा मित्रावरुणा चरन्ती मुखँयज्ञानामभिसँविदाने ।
उषासा वाꣳ सुहिरण्ये सुशिल्पेऽऋतस्य योनाविह सादयामि ६

प्रथमा वाꣳ सरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा ।
अपिप्रयञ्चोदना वाम्मिमाना होतारा ज्योतिः प्रदिशा दिशन्ता ७

आदित्यैर्नो भारती वष्टु यज्ञꣳ सरस्वती सह रुद्रैर्नऽआवीत् ।
इडोपहूता वसुभिः सजोषा यज्ञन्नो देवीरमृतेषु धत्त ८

त्वष्टा वीरन्देवकामञ्जजान त्वष्टुरर्वा जायतऽआशुरश्वः ।
त्वष्टेदंविश्वम्भुवनञ्जजान बहोः कर्तारमिह यक्षि होतः ९

अश्वो घृतेन त्मन्या समक्तऽउप देवाँ२॥ऽऋतुशः पाथऽएतु ।
वनस्पतिर्देवलोकम्प्रजानन्नग्निना हव्या स्वदितानि वक्षत् १०

प्रजापतेस्तपसा वावृधानः सद्यो जातो दधिषे यज्ञमग्ने ।
स्वाहाकृतेन हविषा पुरोगा याहि साध्या हविरदन्तु देवाः ११

यदक्रन्दः प्रथमञ्जायमानऽउद्यन्त्समुद्रादुत वा पुरीषात् ।
श्येनस्य पक्षा हरिणस्य बाहूऽउपस्तुत्यम्महि जातन्तेऽअर्वन् १२

यमेन दत्तन्त्रितऽएनमायुनगिन्द्रऽएणम्प्रथमोऽअध्यतिष्ठत् ।
गन्धर्वोऽअस्य रशनामगृभ्णात्सूरादश्वँवसवो निरतष्ट १३

असि यमोऽअस्यादित्योऽअर्वन्नसि त्रितो गुह्येन व्रतेन ।
असि सोमेन समया विपृक्तऽआहुस्ते त्रीणि दिवि बन्धनानि १४

त्रीणि तऽआहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे ।
उतेव मे वरुणश्छन्त्स्यर्वन्यत्रा तऽआहुः परमञ्जनित्रम् १५

इमा ते वाजिन्नवमार्जनानीमा शफानांᳬ सनितुर्निधाना ।
अत्रा ते भद्रा रशनाऽअपश्यमृतस्य याऽअभिरक्षन्ति गोपाः १६

आत्मानन्ते मनसारादजानामवो दिवा पतयन्तम्पतङ्गम् ।
शिरोऽअपश्यम्पथिभिः सुगेभिररेणुभिर्जेहमानम्पतत्रि १७

अत्रा ते रूपमुत्तममपश्यञ्जिगीषमाणमिषऽआ पदे गोः ।
यदा ते मर्तोऽअनु भोगमानडादिद्ग्रसिष्ठऽओषधीरजीगः १८

अनु त्वा रथोऽअनु मर्योऽअर्वन्ननु गावोनु भगः कनीनाम् ।
अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यन्ते १९

हिरण्यशृङ्गोयोऽअस्य पादा मनोजवाऽअवरऽइन्द्रऽआसीत् ।
देवाऽइदस्य हविरद्यमायन्योऽअर्वन्तम्प्रथमोऽअध्यतिष्ठत् २०

ईर्मान्तासः सिलिकमध्यमासः सꣳ शूरणासो दिव्यासोऽअत्याः ।
हꣳसाऽइव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः २१

तव शरीरम्पतयिष्ण्वर्वन्तव चित्तँवातऽइव ध्रजीमान् ।
तव शृङ्गाणि विष्ठिता पुरुत्रारण्येषु जर्भुराणा चरन्ति २२

उपप्रागाच्छसनँवाज्यर्वा देवद्रीचा मनसा दीध्यानः ।
अजः पुरो नीयते नाभिरस्यानु पश्चात्कवयो यन्ति रेभाः २३

उपप्रागात्परमँयत्सधस्थमर्वाꣳ॥ऽअच्छा पितरम्मातरञ्च ।
अद्या देवाञ्जुष्टतमो हि गम्याऽअथाशास्ते दाशुषे वार्याणि २४

समिद्धोऽअद्य मनुषो दुरोणे देवो देवान्यजसि जातवेदः ।
आ च वह मित्रमहश्चिकित्वान्त्वन्दूतः कविरसि प्रचेताः २५

तनूनपात्पथऽऋतस्य यानान्मध्वा समञ्जन्त्स्वदया सुजिह्व ।

मन्मानि धीभिरुत यज्ञमृन्धन्देवत्रा च कृणुह्यध्वरन्नः २६

नराशꣳसस्य महिमानमेषामुपस्तोषाम यजतस्य यज्ञैः ।
ये सुक्रतवः शुचयो धियन्धाः स्वदन्ति देवाऽउभयानि हव्या २७

आजुह्वानऽईड्यो वन्द्यश्चायाह्यग्ने वसुभिः सजोषाः ।
त्वन्देवानामसि यह्व होता सऽएनान्यक्षीषितो यजीयान् २८

प्राचीनम्बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यतेऽअग्रेऽअह्नाम् ।
व्यु प्रथते वितरँवरीयो देवेभ्योऽअदितये स्योनम् २९

व्यचस्वतीरुर्विया विश्रयन्ताम्पतिभ्यो न जनयः शुम्भमानाः ।
देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः ३०

आ सुष्वयन्ती यजतेऽउपाकेऽउषासानक्ता सदतान्नि योनौ ।
दिव्ये योषणे बृहती सुरुक्मेऽअधि श्रियꣳ शुक्रपिशन्दधाने ३१

दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञम्मनुषो यजध्यै ।
प्रचोदयन्ता विदथेषु कारू प्राचीनञ्ज्योतिः प्रदिशा दिशन्ता ३२

आ नो यज्ञम्भारती तूयमेत्विडा मनुष्वदिह चेतयन्ती ।
तिस्रो देवीर्बर्हिरेदꣳ स्योनꣳ सरस्वती स्वपसः सदन्तु ३३

यऽइमे द्यावापृथिवी जनित्री रूपैरपिꣳशद्भुवनानि विश्वा ।
तमद्य होतरिषितो यजीयान्देवन्त्वष्टारमिह यक्षि विद्वान् ३४

उपावसृज त्मन्या समञ्जन्देवानाम्पाथऽऋतुथा हवीᳬषि ।
वनस्पतिः शमिता देवोऽअग्निः स्वदन्तु हव्यम्मधुना घृतेन ३५

सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः ।
अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतꣳ हविरदन्तु देवाः ३६

केतुङ्कृण्वन्नकेतवे पेशो मर्याऽअपेशसे ।
समुषद्भिरजायथाः ३७

जीमूतस्येव भवति प्रतीकँयद्वर्मी याति समदामुपस्थे ।
अनाविद्धया तन्वा जय त्वꣳ स त्वा वर्मणो महिमा पिपर्तु ३८

धन्वना गा धन्वनाजिञ्जयेम धन्वना तीव्राः समदो जयेम ।
धनुः शत्रोरपकामङ्कृणोति धन्वना सर्वाः प्रदिशो जयेम ३९

वक्ष्यन्तीवेदागनीगन्ति कर्णम्प्रियꣳ सखायम्परिषस्वजाना ।
योषेव शिङ्क्ते वितताधि धन्वञ्ज्याऽइयꣳ समने पारयन्ती ४०

तेऽआचरन्ती समनेव योषा मातेव पुत्रम्बिभृतामुपस्थे ।
अप शत्रून्विध्यताᳬ सँविदानेऽआर्त्नीऽइमे विष्फुरन्तीऽअमित्रान् ४१

बह्वीनाम्पिता बहुरस्य पुत्रश्चिश्चाकृणोति समनावगत्य ।
इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ४२

रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः ।
अभीशूनाम्महिमानम्पनायत मनः पश्चादनुयच्छन्ति रश्मयः ४३

तीव्रान्घोषान्कृरवते वृषपाणयोश्वा रथैभिः सह वाजयन्तः ।
अवक्रामन्तः प्रपदैरमित्रान्क्षिणन्ति शत्रूँ॥रनपव्ययन्तः ४४

रथवाहनꣳ हविरस्य नाम यत्रायुधन्निहितमस्य वर्म ।
तत्रा रथमुप शग्मꣳ सदेम विश्वाहा वयꣳ सुमनस्यमानाः ४५

स्वादुषꣳसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवन्तो गभीराः ।
चित्रसेनाऽइषुबलाऽअमृध्राः सतोवीराऽउरवो व्रातसाहाः ४६

ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवीऽअनेहसा ।
पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नोऽअघशꣳसऽईशत ४७

सुपर्णँवस्ते मृगोऽअस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता ।
यत्रा नरः सञ्च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यꣳसन् ४८

ऋजीते परिवृङ्धि नोश्मा भवतु नस्तनूः ।
सोमोऽअधिब्रवीतु नोदितिः शर्म यच्छतु ४९

आजङ्घन्ति सान्वेषाञ्जघनाꣳ॥ऽउपजिघ्नते ।
अश्वाजनि प्रचेतसोश्वान्त्समत्सु चोदय ५०

अहिरिव भोगैः पर्येति बाहुञ्ज्याया हेतिम्परिबाधमानः ।
हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमाꣳसम्परिपातु विश्वतः ५१

वनस्पते वीड्वङ्गो हि भूयाऽअस्मत्सखा प्रतरणः सुवीरः ।

गोभिः सन्नद्धोऽअसि वीडयस्वास्थाता ते जयतु जेत्वानि ५२
दिवः पृथिव्याः पर्योजऽउद्भृतँवनस्पतिभ्यः पर्याभृतꣳ सहः ।
अपामोज्मानम्परि गोभिरावृतमिन्द्रस्य वज्रꣳ हविषा रथँयज ५३

इन्द्रस्य वज्रो मरुतामनीकम्मित्रस्य गर्भो वरुणस्य नाभिः ।
सेमान्नो हव्यदातिञ्जुषाणो देव रथ प्रति हव्या गृभाय ५४

उपश्वासय पृथिवीमुत द्याम्पुरुत्रा ते मनुताँविष्ठितञ्जगत् ।
स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयोऽअपसेध शत्रून् ५५

आक्रन्दय बलमोजो नऽआधा निष्टनिहि दुरिता बाधमानः ।
अपप्रोथ दुन्दुभे दुच्छुनाऽइतऽइन्द्रस्य मुष्टिरसि वीडयस्व ५६

आमूरज प्रत्यावर्तयेमाः केतुमद्दुन्दुभिर्वावदीति ।
समश्वपर्णाश्चरन्ति नो नरोस्माकमिन्द्र रथिनो जयन्तु ५७

आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्यामः
शितिपृष्ठो बार्हस्पत्यः शिल्पो वैश्वदेवऽऐन्द्रोरुणो मारुतः
कल्माषऽऐन्द्राग्नः सꣳहितोधोरामः सावित्रो वारुणः
कृष्णऽएकशितिपात्पेत्वः ५८

अग्नयेनीकवते रोहिताञ्जिरनड्वानधोरामौ सावित्रौ पौष्णौ रजतनाभी
वैश्वदेवौ पिशङ्गौ तूपरौ मारुतः कल्माषऽआग्नेयः कृष्णोजः
सारस्वती मेषी वारुणः पेत्वः ५९

अग्नये गायत्राय त्रिवृते राथन्तरायाष्टाकपालऽइन्द्राय त्रैष्टुभाय

पञ्चदशाय बार्हतायैकादशकपालो विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो द्वादशकपालो मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविꣳशाभ्यां वैराजाभ्याम्पयस्या बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय चरुः सवित्रऽऔष्णिहाय त्रयस्त्रिꣳशाय रैवताय द्वादशकपालः प्राजापत्यश्चरुरदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोनुमत्याऽअष्टाकपालः ६०

इत्येकोनत्रिंशोऽध्यायः

# अथ त्रिंशोऽध्यायः

देव सवितः प्रसुव यज्ञम्प्रसुव यज्ञपतिम्भगाय ।
दिव्यो गन्धर्वः केतुपूः केतन्नः पुनातु वाचस्पतिर्वाचन्नः स्वदतु १

तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् २

विश्वानि देव सवितर्दुरितानि परासुव ।
यद्भद्रन्तन्नऽआसुव ३

विभक्तारꣳ हवामहे वसोश्चित्रस्य राधसः ।
सवितारन्नृचक्षसम् ४

ब्रह्मणे ब्राह्मणङ्क्षत्राय राजन्यम्मरुद्भ्यो वैश्यन्तपसे शूद्रन्तमसे
तस्करन्नारकाय वीरहणम्पाप्मने क्लीबमाक्रयायाऽअयोगूङ्कामाय
पुँश्चलूमतिक्रुष्टाय मागधम् ५

नृत्ताय सूतङ्गीताय शैलूषन्धर्माय सभाचरन्नरिष्ठायै भीमलन्नर्माय
रेभꣳ हसाय कारिमानन्दाय स्त्रीषखम्प्रमदे कुमारीपुत्रम्मेधायै
रथकारन्धैर्याय तक्षाणम् ६

तपसे कौलालम्मायायै कर्मारꣳ रूपाय मणिकारꣳ शुभे वपꣳ
शरव्यायाऽइषुकारꣳ हेत्यै धनुष्कारङ्कर्मणे ज्याकारन्दिष्टाय
रज्जुसर्जम्मृत्यवे मृगयुमन्तकाय श्वनिनम् ७

नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्यो नैषादम्पुरुषव्याघ्राय
दुर्मदङ्गन्धर्वाप्सरोभ्यो व्रात्यम्प्रयुग्भ्यऽउन्मत्तꣳ
सर्पदेवजनेभ्योऽप्रतिपदमयेभ्यः
कितवमीर्यतायाऽअकितवम्पिशाचेभ्यो बिदलकारीँयातुधानेभ्यः
कण्टकीकारीम् ८

सन्धये जारङ्गेहायोपपतिमार्त्यै परिवित्तन्निर्ऋत्यै
परिविविदानमराद्ध्याऽएदिधिषुःपतिन्निष्कृत्यै पेशस्कारीꣳ
सञ्ज्ञानाय स्मरकारीम्प्रकामोद्यायोपसदँवर्णायानुरुधम्बलायोपदाम्
९

उत्सादेभ्यः कुब्जम्प्रमुदे वामनन्द्वार्भ्यः स्रामꣳ
स्वप्नायान्धमधर्माय बधिरम्पवित्राय भिषजम्प्रज्ञानाय
नक्षत्रदर्शमाशिक्षायै प्रश्निनमुपशिक्षायाऽअभिप्रश्निनम्मर्यादायै
प्रश्नविवाकम् १०

अर्मेभ्यो हस्तिपञ्जवायाश्वपम्पुष्ट्यै
गोपालँवीर्यायाविपालन्तेजसेजपालमिरायै कीनाशङ्कीलालाय
सुराकारम्भद्राय गृहपꣳ श्रेयसे वित्तधमाध्यक्ष्यायानुक्षत्तारम् ११
भायै दार्वाहारम्प्रभायाऽअग्न्येधम्ब्रध्नस्य विष्टपायाभिषेक्तारँवर्षिष्ठाय
नाकाय परिवेष्टारन्देवलोकाय पेशितारम्मनुष्यलोकाय प्रकरितारꣳ
सर्वेभ्यो लोकेभ्यऽउपसेक्तारमवऽऋत्यै वधायोपमन्थितारम्मेधाय
वासःपल्पूलीम्प्रकामाय रजयित्रीम् १२

ऋतये स्तेनहृदयँवैरहत्याय पिशुनँविविक्त्यै
क्षत्तारमौपद्रष्ट्र्यायानुक्षत्तारम्बलायानुचरम्भूम्ने परिष्कन्दम्प्रियाय

